# महालक्ष्म्याष्टकम्

नमस्तेस्तु महामाये श्रीपीठे सुरपूजिते
शंखचक्र गदाहस्ते महालक्ष्मि नमोस्तुते ॥ १ ॥

नमस्ते गरुडा रूढे कोलासुर भयंकरि
सर्वपाप हरे देवि महालक्ष्मि नमोस्तुते ॥ २ ॥

सर्वज्ञे सर्व वरदे सर्व दुष्टभयंकरि
सर्वदुःख हरे देवि महालक्ष्मि नमोस्तुते ॥ ३ ॥

सिद्धि बुद्धि प्रदे देवि भुक्ति मुक्ति प्रदायिनि
मंत्रमूर्ते सदा देवि महालक्ष्मि नमोस्तुते ॥ ४ ॥

आद्यंतरहिते देवि आदिशक्ति महेश्वरि
योगाज्ञे योग संभूते महालक्ष्मि नमोस्तुते ॥ ५ ॥

स्थूल सूक्ष्म महारौद्रे महाशक्ति महोदरे
महापापहरे देवि महालक्ष्मि नमोस्तुते ॥ ६ ॥

पद्मासन स्थिते देवि पर ब्रह्म स्वरूपिणि
परमेशि जगन्मातः महालक्ष्मि नमोस्तुते ॥ ७ ॥

श्वेतांबरधरे देवि नानालंकार भूषिते
जगत्स्थिते जगन्मातः महालक्ष्मि नमोस्तुते ॥ ८ ॥

महालक्ष्म्याष्टकं स्तोत्रं यः पठेद् भक्ति मान्नरः
सर्व सिद्धि मवाप्नोति राज्यं प्राप्नोति सर्वदा
एककाले पठेन्नित्यं महापाप विनाशनम्
द्विकालं यः पठेन्नित्यं धनधान्य समन्वितः
त्रिकालं यः पठेन्नित्यं महाशत्रु विनाशनम्
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा

इति श्री महालक्ष्म्याष्टकम् संपूर्णम्